# अथ यजुषजोतिषम् ग्रन्थम्

पंचसंवत्सरमयं युगाध्यक्षं प्रजापतिम् ।
दिनर्त्वयनमासांगं प्रणम्य शिरसा शुचिः ॥१॥

ज्योतिषामयनं पुण्यं प्रवक्ष्याम्यनुपूर्वशः ।
विप्राणां सम्मतं लोके यज्ञकालार्थ सिद्धये ॥२॥

वेद हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान् ॥३॥

यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद्वेदांगशास्त्राणां ज्यौतिषं मूर्धानि स्थितम् ॥४॥

ये बृहस्पतिना भुक्ता मीनात्प्रभृति राशयः ।
ते हृताः पंचभिर्भूता यः शेषः स परिग्रहः ॥५॥

माघशुक्लप्रपन्नस्य पौषकृष्णसमापिनः ।
युगस्य पंचवर्षस्य कालज्ञानं प्रचक्षते ॥६॥

स्वराक्रमेते सोमार्कौ यदा साकं सवासवौ ।
स्यात्तदादियुगं माघस्तपः शुक्लोऽयनं ह्युदक् ॥७॥

प्रपद्यते श्रविष्ठादौ सूर्याचन्द्रमसावुदक् ।
सार्पार्धे दक्षिणार्कस्तु माघश्रावणयोः सदा ॥८॥

धर्मवृद्धिरपां प्रस्थः क्षपाह्रास उदग्गतौ ।
दक्षिणे तौ विपर्यासः षण्मुहूर्त्ययनेन तु ॥९॥

प्रथमं सप्तमं चाहुरयनाद्यं त्रयोदशम् ।
चतुर्थं दशमं चैव द्विर्युग्मं बहुलेप्यृतौ ॥१०॥

वसुस्त्वष्टा भवोऽजश्च मित्रः सर्पोऽश्विनौ जलम् ।
धाता कश्चायनाद्याः स्युरर्धपंचमभस्त्वृतुः ॥११॥

एकान्तरेऽह्नि मासे च पूर्वान् कृत्वादिमुत्तरः ।
अर्धयोः पंचवर्षाणामृदु पंचदशाष्टमौ ॥१२॥

द्युहेयं पर्व चेत्पादे पादस्त्रिंशत्तु सैकिका ।
भागात्मनापवृज्यांशान् निर्दिशेदधिको यदि ॥१३॥

निरेकं द्वादशाभ्यस्तं द्विगुणं गतसंज्ञिकम् ।
षष्ट्या षष्ट्या युतं द्वाभ्यां पर्वणां राशिरुच्यते ॥१४॥

स्युः पादोऽर्धंत्रिपाद्याया त्रिद्व्येकऽह्नः कृतस्थितिम् ।
साम्येन्दोस्तृणोऽन्ये तु पर्वकाः पंच सम्मिताः ॥१५॥

भांशाः स्युरष्टकाः कार्याः पक्षद्वादशकोद्गताः ।
एकादशगुणश्चोनः शुक्लेऽर्धं चैन्दवा यदि ॥१६॥

नवकैरुद्गतोंशः स्यादूनः सप्तगुणो भवेत् ।
आवापस्त्वयुजेऽर्धं स्यात्पौलस्ये।आस्तंगतेऽपरम् ॥१७॥

जावाद्यंशैः समं विद्यात् पूर्वार्धे पर्व सूत्तरे ।
भादानं स्याच्चतुर्दश्यां काष्ठानां देविना कलाः ॥१८॥

जौ द्रा गः खे श्वे ही रो षा श्चिन्मूषक्ण्यः सूमाधाणः ।
रे मृ घाः स्वापोजः कृष्यो ह ज्येष्ठा इत्यृक्षा लिंगैः ॥१९॥

कार्या भांशाष्टकास्थाने कला एकान्नविंशतिः ।
उनस्थाने त्रिसप्तति मुद्बवपेदूनसम्भवे ॥२०॥

तिथिमेकादशाभ्यस्तां पर्वभांशसमन्विताम् ।
विभज्य भसमूहेन तिथिनक्षत्रमादिशेत् ॥२१॥

याः पर्वाभादानकलास्तासु सप्तगुणां तिथिम् ।
युक्त्या तासां विजानीयात् तिथिभादानिकाः कलाः ॥२२॥

अतीतपर्वभागेभ्यः शोधयेद् द्विगुणां तिथिम् ।
तेषु मण्डलभागेषु तिथिनिष्ठांगतो रविः ॥२३॥

विषुवन्तं द्विरभ्यस्तं रूपोनं षड्गुणीकृतम् ।
पक्षा यदर्धं पक्षाणां तिथिः स विषुवान् स्मृतः ॥२४॥

पलानि पंचाशदपां धृतानि तदाढकं द्रोणमतः प्रमेयम् ।
त्रिभिर्विहीनं कुड्वैस्तु कार्यं तन्नाडिकायास्तु भवेत् प्रमाणम् ॥२५॥

एकादशभिरभ्यस्य पर्वाणि नवभिस्तिथिम् ।
युगलब्धं सपर्व स्याद् वर्तमानार्कभं क्रमात् ॥२६॥

सूर्यर्क्षभागान् नवभिर्विभज्य शेषान् द्विरभ्यस्य दिनोपभुक्तिः ।
तिथेर्युता भुक्तिदिनेषु कालो योगो दिनैकादशकेन् तद्भम् ॥२७॥

त्र्यंशो भशेषो दिवसांशभागश्चतुर्दशस्याप्यपनीय भिन्नम् ।
भार्धेऽधिके चाधिगते परोंऽशोद्वावुत्तमे तन्नवकैरवेत्य ॥२८॥

त्रिंशत्यह्नां सषट्षष्टिरब्दः षट् चर्तवोऽयने ।
मासा द्वादश सौर्याः स्युरेतत् पंचगुणं युगम् ॥२९॥

उदयावासवस्य स्युर्दिनराशि सपंचकः ।
ऋषेर्द्विषष्टिहीनः स्याद् विंशत्या चैकयास्तृणाम् ॥३०॥

पंचत्रिंशं शतं पौष्णम् एकोनमयनोन्यृषेः ।
पर्वणां स्याच्चतुष्पादी काष्ठानां चैव ताः कलाः ॥३१॥

सावनेन्दुस्तृमासानां षष्टिः सैकद्विसप्तिका ।
द्युस्त्रिंशत् सावनः सार्धः सौरस्तृणां स पर्ययः ॥३२॥

अग्निः प्रजापतिः सोमो रुद्रोदितिबृहस्पती ।
सर्पाश्च पितरश्चैव भगश्चैवार्यमापि च ॥३३॥

सविता त्वष्टाथ वायुश्चेन्द्राग्नी मित्र एव च ।
इन्द्रो निऋतिरापो वै विश्वेदेवास्तथैव च ॥३४॥

विष्णुर्वसवो वरुणूऽजेकपात् तथैव च ।
अहिर्बुध्यस्तथा पूषा अश्विनौ यम एव च ॥३५॥

नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि ।
यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम् ॥३६॥

उग्राण्यार्द्रा च चित्रा च विशाखा श्रवणोश्वयुक् ।
क्रूरणि तु मघास्वाती ज्येष्टा मूलं यमस्य च ॥३७॥

द्यूनं द्विषष्टिभागेन ज्ञे (हे) यं सौरं सपार्वणम् ।
यत्कृतावुपजायेते मध्येऽन्ते चाधिमासकौ ॥३८॥

कला दश सविंशा स्याद् द्वे मुहुर्तस्य नाडिके ।
द्युस्त्रिंशत् तत्कलानां तु षट्शती त्र्यधिका भवेत् ॥३९॥

ससप्तमं भयुक् सोमः सूर्यो द्यूनि त्रयोदश ।
नवमानि तु पंचाह्नः काष्ठा पंचाक्षरा भवेत् ॥४०॥

यदुत्तरस्यायनतो गतं स्याच् छेषं तथा दक्षिणतोऽयनस्य ।
तदेकषष्ट्याद्विगुणं विभक्तं सद्वादशं स्याद् दिवसप्रमाणम् ॥४१॥

यदर्धं दिनभागानां सदा पर्वणि पर्वणि ।
ऋतुशेषं तु तद् विद्यात् संख्याय सह सर्वणाम् ॥४२॥

इत्युपायसमुद्देशो भूयोप्यह्नः प्रकल्पयेत् ।
ज्ञेयराशिं गताभ्यस्तं विभजेज्ज्ञानराशिना ॥४२॥

इत्येतन्मासवर्षाणां मुहूर्तोदयपर्वणाम् ।
दिनर्त्वयनमासांगं व्याख्यानं लगधोऽब्रवीत् ॥४३॥

सोमसूर्यस्तृचरितं विद्वान् वेदविदश्नुते ।
सोमसूर्यस्तृचरितं लोकं लोके च सम्मतिम् ॥४४॥

॥ इति याजुषज्योतिषं समाप्तम् ॥